चिन्वानाः सुकृतानि वीतविपदो निर्मत्सरैर्मानसैः
मोदन्तां सततञ्च बान्धवसुहृद्गोष्ठीप्रमोदाः प्रजाः ॥११५॥
(ञ)

इति निष्क्रान्ताः सर्वे।

इति पञ्चमोऽङ्कः।

समाप्तमिदं नागानन्दं नाम नाटकम्।

---

(ञ) वृष्टिमिति। घना मेघाः हृष्टानां शिखण्डिनां मयूराणां ताण्डवघटने नर्त्तनार्थं काले वृष्टिं सृजन्तु वर्षन्तु इत्यर्थः। प्रतिक्षणं सञ्जातं सन्ततम् अविच्छिन्नं यत् हरित् सस्यं धान्यादि तदेव उत्त-रीयं नानावर्णवसनरूपं यस्यास्तथाभूतां क्षितिं पृथिवीं कुर्वन्तु च। तथा प्रजाः वीता विगता विपद् यासां तथाभूताः निर्मत्सरैः अन्य-शुभद्वेषवर्जितैरित्यर्थः मत्सरोऽन्यशुभद्वेष इत्यमरः। मानसैः सुकृतानि सत्कार्याणि चिन्वानाः कुर्वन्तः तथा बान्धवानां भ्रातृपितृव्यादीनां सुहृदां मित्राणाञ्च गोष्ठीषु सभासु प्रमोदन्ते इति तथाविधाः सत्यः सततं मोदन्तां सुखीभवन्तु च। शार्दूलविक्रीडितं वृत्तम्।

इति पञ्चमोऽङ्कः।

---

इति बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टा-चार्य्येण विरचिता नागानन्दनाटकव्याख्या समाप्ता।